तत्र विदुषोऽनन्याधिपतित्वान्निरङ्कुशमैश्वर्यमिति प्राप्ते ब्रूमः। जगदुत्पत्त्यादिव्यापारवर्जं सातिशयमेवाणिमाद्यैश्वर्यं विदुषो जगद्व्यापारस्तु परमेश्वरस्यैव सृष्टिवाक्येषु सर्वत्र तस्यैव प्रकरणाद्विदुषश्च तत्रासंनिहितत्वात्। नित्यसिद्धं हि परमेश्वरस्य निरङ्कुशमैश्वर्यम्। चकारो महाभूतसृष्टौ योगिनामशक्यत्वमप्याह। कथं वा विदुष ईश्वरप्रसादायत्तमागन्तुकमैश्वर्यं निरङ्कुशमिति वक्तुं शक्यं तस्मात्सातिशयमैश्वर्यं विदुषः॥ १७॥

प्रत्यक्षोपदेशादिति चेन्नाऽऽधिकारिकमण्डलस्थोक्तेः॥ १८॥

ननु '*आप्नोति स्वाराज्यम्' [तै० १। ६। ३] इति प्रत्यक्षश्रुत्यैश्वर्योपदेशान्निरङ्कुशं विदुष ऐश्वर्यमिति चेन्न। आधिकारिकमण्डलस्थोक्तेः। अधिकारे तत्तद्व्यापारे नियोजयत्यादित्यादीनित्याधिकारिकः सूर्यादिमण्डलस्थः परमात्मा तस्योत्तरवाक्ये 'आप्नोति मनसस्पतिम्' [तै० १। ६। २] इत्यत्र प्राप्यत्वेनोक्तेर्विदुषः सातिशयमैश्वर्यमिति गम्यते। यदि पूर्ववाक्य एव निरतिशयमैश्वर्यमुक्तं तदेदमीश्वरप्राप्तिवचनं व्यर्थं स्यादतः सातिशयमैश्वर्यं विदुषः॥ १८॥

ननूपाधिव्यतिरिक्तस्य ब्रह्मणोऽसत्त्वे कुतोऽयं विभाग इत्यत आह—

विकारावर्ति च तथा हि स्थितिमाह॥ १९॥

सगुणे ब्रह्मणि +विकारावर्ति च निर्गुणं स्वरूपमस्ति। तथा हि ब्रह्मणि सगुणत्वनिर्गुणत्वयोः स्थितिमाह श्रुतिः 'एतावानस्य महिमा [छा० ३। १२। ६] इति। सगुणत्वमुक्त्वा 'अतो ज्यायांश्च पुरुषः' इति निर्गुणत्वमाह। एतावान्सहस्रशीर्षेत्यादिरस्य परस्य

---

सर्वभूतसृष्टिवाक्येषु परमात्मनः प्रकृतत्वात्। न चापि ते परमात्मवत्प्रकृता इत्याह—असंनिहितत्वात्। योगिनाम्। चकारो महाभूतसृष्टौ योगिनामशक्यत्वमाह॥ १७॥

प्रत्यक्षेति। प्रत्यक्षोपदेशादाप्नोति स्वाराज्यमित्यादेर्योगिनां जगद्व्यापारस्वातन्त्र्यमिति चेन्न। कुतः। आधिकारिको य आदित्यमण्डलस्थस्तस्योक्तेः॥ १८॥

ननूपाधिव्यतिरिक्तस्य ब्रह्मणोऽसत्त्वे कुतोऽयं विभाग इत्यत आह—विकारेति। विकारावर्त्यपि नित्यमुक्तं पारमेश्वरं न केवलं विकारमात्र-

---

* ख. 'आप्नोति। स्वाराज्यम्' इत्यादेर्योगिनां जगद्व्यापारे स्वातन्त्र्यमिति चेन्न कुतः।
+ ख. विकाररहितम्।

महिमा विभूतिरित्यर्थः। अयं भावः—यथा सगुणे स्थितं निर्गुणं स्वरूपमुपासको न प्राप्नोति तदुपासकत्वाभावात्तथा तद्गतं जगत्स्रष्टृत्वादिकमप्यैश्वर्यं न प्राप्नोति *तदुपास्त्यभावादुपास्त्यभावश्च श्रुत्यभावादिति ॥ १९ ॥

अत्र दृष्टान्तार्थं निर्गुणं स्वरूपमुक्तं तत्र प्रमाणान्तरमाह—

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥

एवं ब्रह्मणो निर्गुणत्वं श्रुतिस्मृती दर्शयतः। 'न तत्र सूर्यो भाति न चन्द्रतारकम्' [ क० ५ । १५ ] इत्याद्या श्रुतिः 'न तद्भासयते सूर्यः' [ भ० गी० ५ । ६ ] इत्याद्या स्मृतिरिति ॥ २० ॥

ननु परमेश्वरस्य जगत्कर्तृत्वमुक्तं तत्समानशीलाश्च योगिन इत्यत आह—

भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

उपासकस्योपास्यदेवतया सह भोगमात्रेण साम्यं श्रुतं न जगद्व्यापारेण 'तमाहाऽऽपो वै खलु पीयन्ते लोकोऽसौ' इति। तस्माल्लिङ्गाद्विदुषः सातिशयमैश्वर्यं गम्यत इत्यर्थः। तं ब्रह्मलोकस्थमुपासकं हिरण्यगर्भ आह आपो वै खल्वमृतमय्यो मया पीयन्ते भुज्यन्ते तवाप्यसावमृतोदकलक्षणो लोको भोग्य इत्यर्थः ॥ २१ ॥

ननु यदीश्वरैश्वर्येणातिशयेन सहितं विदुष ऐश्वर्यं सातिशयं तर्हि लौकिकैश्वर्यवदनित्यं स्यात्तथा च विदुषोऽप्यावृत्तिः प्रसज्येतेत्याशङ्क्य दयासिन्धुर्भगवान्बादरायणः समाधत्ते—

---

गोचरं सवितृमण्डलाद्यधिष्ठानम्। तथा हि द्विरूपां हि यस्मात्स्थितिमाहाऽऽम्नायः—एतावानस्य महिमेत्यादिना ॥ १९ ॥

नन्वत्र पादत्रयमुपलभ्यते न त्वस्य प्रमाणं किंचिदित्यत आह—दर्शयत इति। एवं विकारावर्ति रूपं श्रुतिस्मृती दर्शयतः। श्रुतिर्न तत्र सूर्य इत्याद्या। स्मृतिर्न जायत इत्याद्या। चकारो मुक्तेरपि सत्त्वमाह ॥ २० ॥

ननु परमेश्वरस्य जगत्कर्तृत्वमुक्तं तत्समानशीलाश्च योगिन इत्यत आह—भोगेति। अनादिसिद्धेन परमेश्वरेण भोगमात्रं समानं योगिनां यथैतां देवतामित्यादिना। तदेव लिङ्गं जगद्व्यापाराभावे। चकारादनेकेश्वरादिदोषश्च ॥ २१ ॥

---

* ख. भूतोत्पादनसमये योगिनामीश्वरसंनिधानाभावादित्यर्थः।

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

येऽर्चिरादिमार्गेण ब्रह्मलोकं प्राप्तास्तेषामनावृत्तिरेव तेषां न पुनरावृत्तिरित्यादिक्रममुक्त्यभिधायकशब्दादित्यर्थः । निर्गुणब्रह्मविदामावृत्तिशङ्कैव नास्ति यतः सगुणविदामपि निर्गुणाश्रयणेनैवानावृत्तिर्नान्यथा । तस्माद्ब्रह्मविदां निरस्तानर्थव्रातस्वप्रभनिरतिशयानन्दब्रह्मात्मनाऽवस्थितिरिति सिद्धम् । सूत्रावृत्तिः शास्त्रसमाप्तिद्योतनार्था ॥ २२ ॥

यः सर्वश्रुतिबन्दिवन्दिततनुर्मायात्मनिद्रान्तगः
सुप्तोऽस्मिन्भवपत्तने परिमिते कल्पान्तकल्पान्तरे ।
यः सर्वापरिपन्थिसाङ्गनयजप्रज्ञाप्रवाहान्तज-
प्रज्ञालभ्यसुखाकृतिः कृतिमिमां रामः स गृह्णातु नः ॥ १ ॥

अस्मिन्पद्येऽध्यायचतुष्टयार्थः सूचितः ।

विदुषां कण्ठभूषेयं कृता वृत्तिर्मया प्रभो ।
व्यासवाङ्मणिसंदृब्धा प्रीतये तेऽस्तु सर्वदा ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमन्मुकुन्दगोविन्दश्रीचरणाशिक्षितश्रीरामकिंकरधर्मकृतौ ब्रह्मसूत्रवृत्तौ ब्रह्मामृतवर्षिण्यां चतुर्थस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तोऽयं ग्रन्थः ॥

---

ननु एवं सति सातिशयत्वादन्तवत्त्वमैश्वर्यस्य स्यात्ततश्चैषामावृत्तिरिति चेत्—अनावृत्तिरिति । नाऽऽवृत्तिश्च शब्दात् । सूत्राभ्यासः शास्त्रसमाप्तिं द्योतयति ॥ २२ ॥

सूत्राणि सूक्ष्माणि हि चर्मनेत्रै-
र्बोद्धुं न शक्यानि सुवर्णसंघात् ।
तेषां प्रबोधाय सुवर्णजालं
निःसारितं भूरि विधाय दीपम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यानन्दात्मपूज्यपादशिष्यस्य
श्रीमच्छंकरानन्दभगवतः कृतौ ब्रह्मसूत्रदीपिकायां
चतुर्थस्याध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

१ क. 'निद्रा मतः सु' । २ क. 'न्ततल्पा' ।

*

# श्रीमद्द्वैपायनप्रणीतब्रह्मसूत्राणां वर्णानुक्रमपत्रकम् ।

## आ.

### इ.



### ई.

## द.

## प.

## श.

## स.